* ओ३म् *

गुरुकुलसंस्कृतपाठ्य ग्रन्थमाला १

# संस्कृतप्रवेशिका ॥

## गुरुकुलविद्यालयोपयोगाय

गुरुकुलमुख्याधिष्ठातुराज्ञया प्रकाश्यमानीता

[illegible]

श्री लाला नन्दलाल-



प्रबन्धेन

काङ्गड़ी गुरुकुल-यन्त्रालये

मुद्रिता

१९७९ वैक्रमाब्दे * ३९ दयानन्दाब्दे

पञ्चमावृत्तिः १०००  मूल्यम् ।=)

* ओ३म् *

# द्वित्राः शब्दाः ।

या संस्कृतभाषा कस्मिंश्चित् समये भारततनयानां मातृभाषाऽऽसीत्, यस्या भाषाया मधुरध्वनिः कस्मिंश्चित् काले महतो विक्रमादित्यस्य विद्वन्मण्डितायां परिषद्यश्रूयत, या ह्राससीम्नि वर्तमानापि नैसर्गिकेण माधुर्य्येण, अक्षय्येण शब्द-निधानेन, कलाविशेषेणैव साहित्येन च सारग्राहिणां पाश्चात्य-विदुषां हृदयान्याकर्षति, या च पक्षपातान्धानामपि लेखनीं का-निचित्स्तुतिवाक्यानि लेखितुं बलात् प्रवर्तयति, तस्या दुर्दशाऽद्य भारते लक्ष्यते तामवलोक्य सचेतसां प्राचीनसेविनां च हृदयानि विदीर्णानि जायन्ते। यद्यप्यस्यामल्पाक्षरभूमिकायां संस्कृतभाषाया दुःस्थितेः कारणकलापस्यालोचनं नोचितं वर्तते तथाप्येतावन्नि-र्भीकमुपन्यस्तुं शक्यते, यत्संस्कृतविद्वांस एवात्रोपालम्भमर्हन्ति। नाहं न जाने, यद्भारतवासिनां विशेषतश्शिक्षितानां संस्कृत-विषयमनौत्सुक्यं, तद्विषयको भक्त्यभावोऽप्यत्र कारणमस्ति परन्तु मन्ये तत्रापि संस्कृतविद्वांस एवापराध्यन्ति।

संस्कृताध्यापकानां यादृश्यध्यत्वेऽध्यापनप्रणालीवर्तते तया
संस्कृतच्छात्रैर्महान् प्रयासोऽङ्गीकर्तव्यो भवति; कालात्ययस्य तु
कथैव का। सर्वस्मिञ्जन्मनि विद्यार्थिभिर्व्याकरणपरिचयोऽपि न
कर्तुं पार्यते! गुरुकृपया चतुर्दशभिर्हायनैः कथंचिद्गृहीतव्याकर-
णतत्त्वा अपि प्रायोदृश्यन्ते यत्संस्कृतभाषाया एकमपि वाक्यं
वक्तुं न शक्नुवन्ति। एतां आजीवनं जगतः पृथगकर्मण्या इव
तिष्ठन्ति। एतां स्थितिमवलोक्य केचित्संस्कृतमध्येतुमिच्छन्तोऽ-
प्यनल्प प्रयाससाध्यां संस्कृताधीतिं गिरिखननेन मूषकोपलब्धि-
मिव मन्यमाना विरमन्त्यस्माद् व्यापारात्, हतोत्साहाश्च जा-
यन्ते। तदत्र विषयेऽवश्यमेव संस्कृतविद्वद्भिर्विचारः कर्तव्यः, इत-
रथाऽल्पावशिष्टोपि संस्कृताभ्यासस्सर्वथैव विलोपमवाप्स्यति।

अहन्तु मन्ये, संस्कृताध्यापनस्य विचित्रा रीतिरेवात्र कारणं
वर्तते। भाषाया अल्पमपि परिचयमन्तरैवाध्यापकैर्व्याकरणाध्या-
पनमारभ्यते, तेन महान्प्रयासोऽङ्गीकर्तव्यो भवति महान् कालक्षे-
पो जायते, अल्प-मत्यल्पं फलमुपलभ्यते। भाषा परिचयमन्त-
रैव कथन्नाम कस्याश्चिद् भाषया व्याकरणमवगन्तुं शक्यते?
एतत्कथंचनापि न सम्भवति, अयं सर्वेषां विदुषामनुभवो वर्तते,
अत्र न कस्यचिदपि विवादो भवितुमर्हति, तथापि संस्कृताध्याप-
कैरूढिर्न त्यज्यते। अहो! रूढिश्शास्त्राद्बलीयसी!

एतस्य फलमपि संस्कृताध्येतृभिरुपभुज्यत एव । प्रायेण तेषां विचारशक्तिः प्रणाशमुपयाति, स्मरणशक्तिरेवात्र शिष्यते। अत्रापवादा अपि दुर्लभा न सन्ति, तथाप्यौत्सर्गिकी दशा सैव दृश्यते खलु या मयोऽर्ध्वमदृश्यत ।

इयं खल्ववस्था कृतवयसाम् । यदि बालका आदावेव व्याकरणं पाठ्येरंस्तदा तेषामतोपि हीनतरा दशा जायते, तेषां शिक्षणेऽतोप्यधिकं काठिन्यमनुभूयते । ते तु कथमपि भाषापरिचयमन्तरा व्याकरणमात्रबोद्धुमर्हन्ति । किंच भाषाज्ञानं मुख्यमुद्देश्यं, व्याकरणज्ञानं तु तदुपकारकम् ।

एतदेव काठिन्यमध्यापनावसरे गुरुकुलीयशिक्षकवर्गेण भृशमनुभूतम् । भूयो गवेषितेपि न किमपि पुस्तकं बालानामुपकारकंमम दृष्टिपथमुपागमत् । यद्यपि संस्कृतभास्करादिनामाङ्कितानि कतिपयपुस्तकान्युपलभ्यन्ते, तथापि न तानि कथंचिदपि बालोपकारकतां भजन्ते, एतदेव मनसिकृत्य बालोपकारकाणि कानिचित् पुस्तकानि संस्कृतग्रन्थावलिमिषेण प्रकाशयितुमहं निरचैषम् । तस्याद्योगस्य फलभूतेयं "प्रवेशिका" भवतां करमुपसर्पति, अनयैवरीत्याऽन्यान्यपि बालोपयोगीनि पुस्तकानि प्रकाशयिष्यन्ते। गुरुकुलोपकारकुर्वन्तीयं ग्रन्थावलिराशास्यते, अन्येषां संस्कृतविद्यालयानामध्यापकाञ्चाप्युपकारिका भविष्यति ।

शुभकामनया प्रेरितास्सर्वे विमर्शास्सादरं सधन्यवादञ्च-स्वीकरिष्यन्ते ।

मुख्याधिष्ठाता

## पञ्चम-संस्करण-भूमिका

महामहिम्नो जगदीश्वरस्य, संस्कृताध्येतृणाञ्चानुग्रह-वशादद्य "संस्कृत प्रवेशिकायाः" पञ्चमं संस्करणं प्रकाश-यितुमुद्युक्ताःस्म । यथा अल्पक एव काले सर्वाण्यपि मुद्रि-तपुस्तकानि समाप्तमापुः, यथा च प्रतिदिनं पुस्तकं जिघृ-क्षूणां पत्राण्यस्मत्सकाशमायान्ति, तेन भारतीयानां संस्कृता-ध्ययने नवोत्साहकलिका, अस्माभिर्मुद्रितायाश्च "संस्कृ-तप्रवेशिकायाः" महत्युपयोगिता स्फुटमेव प्रकाशिता भवति । यैर्हि हितमभिलाषुकैस्समालोचकैस्समालोचनया वयमन्वग्राहिषत, वयमद्य तेभ्यः सहर्षं धन्यवादान् वितरामः । तैर्दर्शि-तांश्चयथार्थदोषानस्मिन् संस्करणे दूरीकर्तुं विशेषतः प्रय-तिष्महे, तथा च तद्ग्रन्थदर्शनादेव स्फुटीभविष्यति । येऽपीर्ष्यावशाकलुषितमानसाः "गुणिनां गुणेषु सत्स्वपि पिशुनजनो दोषमात्रमादत्ते; पुष्पे फले विरागी क्रमेलकः कण्टकौघ" मिवेति न्यायमनुसरन्तः, "परदोषकथाभि-रल्पकः स्वजनं तोषयितुं किलेच्छती" ति महाकविभणि-तिनिदर्शनताञ्चावहन्तः सम्बद्धमसम्बद्धं वा यत्किञ्चित्प्रला-पिषुः, तेऽपि ननु नमस्कारार्हा एव । यतः—

नमः खलेभ्यः; क इहाथवा नतो-
नले नमस्येदिह यो जिजीविषुः ।
विनैव ये दोषमृषिप्रकाण्डव-
न्नयन्ति शापेन रसातलं नरान् ॥

आशास्महे च गुणग्राहिणामध्यापकानामध्येतॄणां च चित्त-प्रसादनम्भविष्यत्येतद्द्वपञ्चमं संस्करणमिति ।

मुख्याधिष्ठाता



॥ ओ३म् ॥

# अथ संस्कृत प्रवेशिका

## प्रथमोऽध्यायः ।



### पाठ १



पुरुषः, कुक्कुरः, पिब,

पश्यति, कथयामि, देहि,

अहम्, जलम्, बालकः ।

विशेषः—यदैषांपदानामर्था विद्यार्थिभिस्सम्यगवबुद्ध्येरन् तदाऽध्यापकेनात्रापोद्वापाभ्यामेषामर्थास्तेषां हृदयेष्वङ्कनीयाः, अन्यानि चैतत्पदघटितानि बहूनि वाक्यानि निर्माय दर्शनीयानि ।

यथाः- कपिः पश्यति, जलं देहि, अहं कथयामि, इत्यादि । यथाशक्यञ्च वाक्यानि रचयितुं विद्यार्थिन एव प्रोत्साहनीयाः, अधो लिखितश्च प्रकारोऽवश्यमुपयुज्येत ।

यदि "कथयामि" इति वाक्यं विरचनीयं स्यात्तर्हि प्रागुदेशीयभाषायां नीलफलके लेखनीयम् "मैं कहता हूं"पुनर्विद्यार्थिनः प्रष्टव्याः "मैं" इत्यस्यकिं संस्कृतम् ? यदा त उत्तरयेयुः "अहं" इति, ततस्तदपि नीलफलके लेखनीयम् । अनयैव रीत्या पुनः "कहता हूं" इत्यस्य संस्कृतं पृष्ट्वा फलके लिखित्वा दर्शनीयं, यत् "मैं कहता हूं" इति समस्तवाक्यस्य संस्कृतम् "अहं कथयामि" इति ।

अयमेव प्रकारोऽग्रिमेषु पाठेष्ववलम्बनीयः, एतया रीत्या अतिशीघ्रं विद्यार्थिनो वाक्यानां विरचने पटवो भविष्यन्ति ।

# पाठः २

त्वम्, मह्यम्, उपधिः, आनय, अस्ति ।

| | |
|---|---|
| जलम् पिब | उपधिम् आनय |
| काष्ठशय्या अस्ति | अहं कथयामि |
| उपधिम् पश्य | बालकोऽस्ति |
| पुष्पम् पश्यति | मह्यं देहि |
| त्वं गच्छ | पुष्पम् आनय |

वि० १— पाठस्य मूर्द्धनि लिखितानां पादानामेतत् प्रयोजनं यदस्मिन् पाठे एतेषाम्पदानाम्प्रयोगोऽतिस्पष्टं दर्श्येत । एतानि पदानि केवलमध्यापकोपयोगीन्येव, विद्यार्थिभ्यस्तु नैषां पार्थक्येनार्थः कथनीयः, किंतु वाक्येष्वेव । बालका वाक्येषु झटित्यर्थमबोद्धुं शक्नुवन्ति, न पार्थक्येन ।

२—यानि पदानि विद्यार्थिभिः पूर्वस्मिन् पाठेऽवबुद्धानि, यानि, च पदान्यत्र नूतनान्यधीतानि, तानि सर्वाणि संमिश्य अन्यानि भूयांसि वाक्यान्युदाहार्याणि ।

३—"उपधिम् आनय" इत्यादि वाक्येषु पूर्वमयाजयित्वैव स्वरं व्यञ्जनेन वाक्यान्यध्यापनीयानि, पठितेषु केषुचित् पाठेषु ते स्वर व्यञ्जनयोर्योगनियमं स्वत एव ज्ञास्यन्ति ।

—:०:—

# पाठः ३



सः, गच्छामि, कूर्दते, मेषः, पिबति ।

| | |
|---|---|
| मेषः कूर्दते | अहं गच्छामि |
| त्वं वस्त्रम् आनय | दुग्धम् पिब |
| स जलम् पिबति | देवदत्तः करोति |
| स वस्त्रम् पश्यति | त्वं जलम् पिब |
| जलपात्रं मह्यं देहि | स कूर्दते |

विशेषः १–अत्रापि पूर्ववदध्यापकेन प्राक् स्वयं बहूनि वाक्यानि निर्माय दर्शनीयानि, तदनु विद्यार्थिनोऽपि लघुनि वाक्यानि निर्मातुं प्रोत्साहनीयाः ।

२—मूर्द्धनि निवेशितानां पदानामर्थाः, अन्यानि नैकानि वाक्यान्युदाहृत्य सम्यक् छात्राणां हृदयंगमाः कर्त्तव्याः ।

३—यावदेकस्मिन् पाठे समागतानां नूतनपदानामर्थास्तेषां प्रयोगश्च विद्यार्थिभिस्सम्यङ् न ज्ञायेत, तावद्द्वितीयं पाठं पाठयितुं कथमपि न प्रयतनीयम् ।

# पाठः ४

किम्, कुत्र, गच्छसि, वयम्, भक्षयामः, तव, करोषि, तस्मै ।

| | |
|---|---|
| त्वं गच्छसि | त्वं किं करोषि ? |
| तस्मै वस्त्रं देहि | वयं फलं भक्षयामः |
| तव पुष्पम् अस्ति | चन्द्रपालः किंपश्यति ? |
| कुत्र गच्छसि ? | त्वं पुष्पं पश्य |
| अहं कुत्र गच्छामि ? | स गच्छति |

वि० १—अत्र बहूनि वाक्यानि निर्माय विद्यार्थिभिरभ्यासः कार्य्यताम् । यथा "त्वं कुत्र गच्छसि ?" "बालकः किं पश्यति ?" "मह्यं वस्त्रं देहि" "अहं कुत्र गच्छामि ?"

२—प्रश्नवाक्येषु अन्यवाक्येषु च भेदः स्पष्टं दर्शनीयः, किञ्च तथा प्रयतनीयं यथा छात्राः प्रश्नवाक्यं प्रश्नवदेव उच्चारयेयुः, स्वरस्यभेदोऽवश्यं स्यात्, यत्पदञ्च बलेन वक्तव्यं, तत्रैव बलं स्यात् ।

# पाठः ५

न, च, गौः

धावति क्रीडति लेखनी।

| | |
|---|---|
| देवदत्तःकुत्र क्रीडति ? | गौः जलं पिबति |
| त्वं गुरुकुलं गच्छ | पुष्पं जलं च आनय |
| पुरुषो धावति | पुस्तकं लेखनीं च देहि |
| लेखनीं मह्यं देहि | वयं सूपं न भक्षयामः |
| विष्णुदत्तो न क्रीडति | स धावति,त्वं च पश्यसि |

वि० १—मूर्धनि लिखितानां पदानाम्प्रयोगोऽन्यानिवाक्यान्युदाहृत्य सम्यक् प्रबोधनीयः।

२—पुरुषो धावतीत्यादिवाक्येष्वोकारस्नियमो दर्शनीयः। व्याकरणस्य सूक्ष्मानियमा नापेक्ष्यन्ते किन्तु साधारणतो बोधनीयाः, यन्नकारधकारादिषु परतः विसर्गाणामोकारो जायते, तथा "पुरुषो धावति" "विष्णुदत्तो न क्रीडति इत्यादयश्च प्रयोगा भवन्ति, अन्यानि च बहूनि वाक्यान्युदाहर्तव्यानि।

## पाठ ६

तत्र, मम, वर्तते, कुरु, गच्छेयम्, गृहाण, वदसि ।

| | |
|---|---|
| स तत्र क्रीडति | मम मसिपात्रम् आनय |
| तत्र गच्छेयम् ? | ममपुस्तकं गृहाण |
| मम पुस्तकं पश्य | तत्र गच्छामि |
| तव पुस्तकं कुत्र वर्तते ? | मम मसिगर्भा न गृहाण |
| हरिदत्तःकोलाहलंकरोति | तत्र किं करोषि ? |
| त्वं किं वदसि ? | त्वं तत्र कोलाहलंकरोषि |
| कोलाहलं न कुरु | तत्र भूमित्रो वर्तते |

---

# पाठः ७



पादुके, धूम्रयानम, अद्य,
तिष्ठ, शृणोति, किमर्थम्

| | |
|---|---|
| ममपादुके देहि | स किं लिखति |
| देवदत्तः किं शृणोति? | मम पादुके न गृहाण |
| त्वं कुत्र पठसि ? | विजयःकिमर्थं धावति |
| तत्र तिष्ठ | अहं कुत्र तिष्ठेयम् |
| त्वं किमर्थं न पठसि | लेखनीं गृहाण |
| अहं किमर्थं पठेयम् | मम पादुके धारय |
| त्वं पुस्तकं पठसि | स पुस्तकानि पठति |
| अद्य वासुदेवः कुत्रवर्तते | तत्र गौर्धावति |

पश्य तत्र धूम्रयानं गच्छति

## पाठः ८



वृथा. घटिका, गच्छतः

वालकौ, गर्जति, [illegible]

| | |
|---|---|
| पत्रं गृहाण | अश्वा धा[illegible] |
| देवराजःफलानिभक्षयति | त्वं वृथा वदसि |
| वालकौविद्यालयंगच्छतः | घटिका कुत्र वर्तते ? |
| सिंहः क्रीडति | वृषभो जलं पिवति |
| मेघः कुत्र गर्जति ? | अश्वसिंहौ धावतः |
| सिंहो वने गर्जति | चन्द्रशेखरोवनेक्रीडति |
| त्वं वने किमर्थंभ्रमसि ? | त्वं घटिकाम् आनय |

———

## पाठः ६

| | | |
|---|---|---|
| अधुना, | ते, | गच्छन्ति, |
| बालकाः, | कपयः, | शूकरः, |

ते लवपुरं गच्छन्ति
अधुना त्वं किं करोषि?
बालकाःफलानि भक्षयन्ति
अधुना विद्यालयं गच्छ
ते किं कुर्वन्ति ?
ते वानरान् पश्यन्ति

बालकाः उद्याने क्रीडन्ति
तत्र कपयः कूर्दन्ते
वने शूकरो धावति
मसिगर्भां तस्मै देहि
अधुना फलानि गृहाण
अधुना त्वं लेखनीम्
आनय ।
ते तत्र जलं पिबन्ति

देवदत्तयज्ञदत्तभूमित्राः ग्रामं गच्छन्ति ।

वि०—अत्र प्रथमाविभक्तौ 'बालक' शब्दस्य रूपाणि दर्शनीयानि ।

| एकवचनम् | द्विव० | बहुव० |
|---|---|---|
| बालकः | बालकौ | बालकाः |

एतत्सदृशाः पुरुष, अश्व, सिंह, मेघ प्रभृतयश्शब्दा अविजय, वासुदेवादि नाम्नामपि रूपाणि दर्शनीयानि । अनयैवरीत्या यत्रोपयुज्येत, उचितं च स्यात् तत्र तत्रान्यासु विभक्तिषु रूपाणि दर्शनीयानि ।

# पाठ १०

आवाम्, गच्छामः, गृह्णाति, भो, पठतः, तौ, सन्ति, कति, किमपि, लिखावः ।

| | |
|---|---|
| भूदेवः कन्दुकं गृह्णाति | तौ किमर्थं पुस्तकं पठतः |
| चन्द्रपालो गृहं गच्छति | वयं किमपि न पश्यामः |
| आवां लिखावः | भो बालकाः! अधुना पठत |
| ते तत्र किं कुर्वन्ति ? | गौः शब्दं करोति |
| ते तत्र पाठं पठन्ति | ते कोलाहलं कुर्वन्ति |
| वयं गृहं गच्छामः | अहं किमपि न कथयामि |
| तत्र कति फलानि सन्ति? | |

वि० अत्र गम्लृ ( गच्छ ) पा ( पिब ) पठ, सदृशानांधातूनां वर्त्तमानस्य प्रथमपुरुषे रूपाणि दर्शनीयानि ।

| एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|
| गच्छति | गच्छतः | गच्छन्ति |

तेषां नामवचनैस्सह च सम्बन्धो दर्शनीयः ।

—:o:—

# पाठ ११

हरिणान्, शृण्वन्ति, तस्य, युवाम्, यूयम्, गच्छथः, गच्छथ, भवान्, शृणु

( १ )

आवां हरिणान् पश्यावः
ते विडालस्य शब्दं शृण्वन्ति।
शूकरो वने घुर्घुरायते
युवां कुत्र गच्छथः ?

त्वं हरिं किमर्थं ताडयसि ?
यूयं विद्यालयं किमर्थं न गच्छथ ?
ब्रह्मचारिणो हवनं कुर्वन्ति।
भवान् कुत्र गच्छति ?

( २ )

हरिदत्तसत्यपालौ वनं गच्छतः।
भो विष्णुदत्त ! त्वं किमर्थं कोलाहलं करोषि ?
यूयं किमर्थं न पठथ ?

स हरिणान् गृह्णाति
मम लेखनी पुस्तकं च तत्र वर्त्तते।
त्वं वृथा शब्दं करोषि
मम गानं शृणु

वि० अत्र मध्यमोत्तमपुरुषयोरपि रूपाणि दर्शनीयानि

## मध्यम पुरुषे

| एकवचनम | द्विवचनम् | बहुवनम् |
| --- | --- | --- |
| गच्छसि | गच्छथ | गच्छथ |

## उत्तम पुरुषे

| | | |
| --- | --- | --- |
| गच्छामि | गच्छाव: | गच्छाम: |

एवं पा ( पिव ) क्रीड्, प्रभृतीनामपि धातूनाम् ।

## प्रथम पुरुषे

| | | |
| --- | --- | --- |
| पिवति | पिवत: | पिवन्ति |

## मध्यम पुरुषे

| | | |
| --- | --- | --- |
| पिवसि | पिवथ: | पिवथ |

## उत्तम पुरुषे

| | | |
| --- | --- | --- |
| पिवामि | पिवाव: | पिवाम: |

———

# पाठः १२



कः, कीदृशम्, अयम्, सिंहः, त्वाम्, स्नातुम्, उदेति, अत्र,

( १ )

अयं को वर्त्तते ?
स्नातुं गच्छ
ते मां ताडयन्ति
स घंटां नादयति
अधुना रात्रिरस्ति
वृक्षम्पश्य
सिंहो गर्जति

मम शाटिकाम् आनय
तव उपवस्त्रंकीदृशंवर्त्तते?
अत्र किमर्थं तिष्ठसि ?
तौ त्वां पश्यतः
त्वामहं पश्यामि
त्वं किमर्थं कोलाहलं करोषि ?

( २ )

भो भूपेन्द्र ! त्वं कुतो न गच्छसि ?

निर्दयाः पुरुषाः पशूंस्ताडयन्ति ।

| | |
|---|---|
| भोबालकाः! घण्टानादो जातः, पठितुं चलत । | वयमधुना स्नातुं गच्छामः |
| यूयंस्नातुंकुतोनगच्छथ? | जलं पातुं गच्छत |
| | मसिपात्रमानेतुं गच्छेयम् |

वि०—अन्यानि वाक्यानि प्रतिपाद्यमुदाहर्त्तव्यानि । देशीयभाषाया वाक्यानां संस्कृते, संस्कृतवाक्यानां चानुवादो देशीयभाषायां सर्वदा करणीयः । "पशुंस्ताडयन्ति" इत्यादौ सन्धेः कार्त्स्न्येन नियमो वक्तव्यः ।

( ३ )

| | |
|---|---|
| प्रातःकाले सूर्य उदेति | यूयं हरिणान् पश्यथ |
| रात्रौ ताराः प्रकाशन्ते | भवान् कुत्र गच्छति ? |
| अयं बालकः पत्रं पठति | वयं श्लोकान् शृणुमः |
| अत्र विद्यार्थिनो विद्यां पठन्ति । | को वानरं ताडयति ? |
| स किमर्थं कूर्दते ? | तौ पुरुषौ वृथा वदतः |
| | अधुनापुस्तकानि गृहीत्वा पाठशालां गच्छ । |

———

# पाठः १३



समीपम्, उष्ट्रः, उपरि, अधः,
तेषाम्, शृणोमि, बाढम्, इतस्ततः।

| | |
|---|---|
| अद्य आकाशः कीदृशो वर्त्तते ? | तवोपवस्त्रमतिमलिनमस्ति |
| निर्मलो वर्त्तते। | प्राङ्गणे काकाः शब्दं कुर्वन्ति |
| आकाशे मेघा इतस्ततो धावन्ति। | किं त्वं तेषां शब्दं शृणोषि? |
| पक्षिणः पक्षाणां साहाय्येन उड्डीयन्ते। | बाढम्, शृणोमि। |
| | अधः किं पश्यसि ? |
| | उपरि सूर्यं पश्यामि |
| | तेषां समीपं गच्छ |

उष्ट्रो वेगेन धावति

— —

# पाठः १४

आगतः, वाति, तस्य,
प्रोञ्छ, कृत्वा, प्रश्चनम् ।

| | |
|---|---|
| वायुर्वाति | चन्द्रमाः शीतलो वर्त्तते |
| तस्य समीपे गच्छ | पठित्वा क्रीडितुं गच्छ |
| सकुक्कुरदण्डेनताडयति | अद्य वायुः शीतलोवर्तते |
| वृक्षात्अधःफलंपतति | भूमित्रआगतो नवा ? |
| भोजनं कृत्वा जलं पिब | तस्य प्रश्चनं देहि |
| उपवस्त्रेण मुखं प्रोञ्छ | त्वं कुतः आगतः |
| सन्ध्यासमय आगतः | स कुत्र गतः ? |
| उद्यानेशीतलोवायुर्वाति | मम वस्त्रंस्वच्छं वर्तते |
| तस्य गृहं निर्मलमस्ति | जलं शीतलं वर्त्तते |
| तव वस्त्रं मलिनं वर्त्तते | धावित्वा कन्दुकमानय |

# पाठः १५



| | | |
|---|---|---|
| पीत्वा, | महिषः | तूष्णीम्, |
| मया, | इदम्, | कृतम्, |

तत्र गत्वा तिष्ठ

त्वं तत्र गत्वा किमर्थं न तिष्ठसि ?

इदं पुष्प वर्त्तते

इदं त्वया कृतम्

चन्द्रस्य किरणाः शीतलाः सन्ति

शीघ्रं, पुस्तकं लेखनीच आनय

शीघ्रं दुग्धं न पिब। भो बालकाः। तूष्णीं भवत

पुस्तकं गृहीत्वा शीघ्रमागच्छ

त्वया किमुक्तम् ?

वयं क्रीडितुं गच्छामः

गावोजलं पीत्वाआगच्छन्ति

महिषा जले क्रीडन्ति

तत्र गत्वा प्रदीपं घटिनां च गृहाण

# पाठः १६



कर्त्तव्यम्, श्वः, सर्पः, गन्तास्मि, तु,
केन, गृहीतम्, सह,

सर्पाः पवनं पिबन्ति
मूर्खा वृथा विवादं कुर्वन्ति
पठनसमय आगतः, अधुना पठनं कर्तव्यम्
अहं श्वो नगरं गन्तास्मि
त्वया मम पुस्तकं किमर्थं गृहीतम् ?
तव मसिगर्भा तेन गृहीता
मया तु तव कम्बलो न दृष्टः
अहं त्वया सह चलिष्यामि

अद्य गङ्गाजलं मलिनं वर्त्तते

कूपस्य जलं तु क्षारं वर्त्तते

मूर्खेण सह विवादो न कर्त्तव्य

ईश्वरस्य स्मरणं नित्यं कर्त्तव्यम्

अस्य वृक्षस्य पत्राणि अतीव सुन्दराणि सन्ति

अस्य कुक्कुरस्य दन्तान् पश्य

त्वं मम समीपे स्थित्वा पठ

मम लेखनीं देहि, अहं लेखितुं गमिष्यामि,

त्वं तु न गमिष्यसि

# पाठ १७



यदा, तदा, दास्यामि, हरिणः, कर्त्तुम्,
अस्माकम् कदा, युष्माकम्,

यदा त्वम् आगमिष्यसि, तदा अहंगमिष्यामि
अहं तस्मै शीतलं जलं दास्यामि
देवदत्तात् मम यष्टिकाम् आनय
अद्य अस्माकं परीक्षा भविष्यति
युष्माकं परीक्षा कदा भविष्यति ?
मया अद्य बहवो हरिणा दृष्टाः
त्वं तत्र किं कर्त्तुं गच्छसि

कूपाज्जलं पीत्वा आगच्छ

किं त्वया मम मसिपात्रं लब्धम् ?

नहि, मया तु न लब्धम्

भोजनं कृत्वा शीघ्रमागच्छ

अद्य बहवो मेघा आगताः, वर्षा भविष्यन्ति

वर्षाजले स्नानेन बहवो रोगा निवर्त्तन्ते

| | | | | |
|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ |
| एकः | द्वौ | त्रयः | चत्वारः | पञ्च |
| ६ | ७ | ८ | ९ | १० |
| षट् | सप्त | अष्टौ | नव | दश |

## पाठः १८

गतवान्, भुक्तवान्, यदि, तर्हि, पास्यामि,
ग्रहीष्यामि, कुतः, यतः, कति,

स स्वदेशं गतवान्

त्वं विद्यालयं कुतो न गतवान् ?

यतोऽहम् अस्वस्थोऽस्मि

देवदत्ताय पञ्च सप्तच्छदपुष्पाणि देहि

त्वमद्य किं भुक्तवान् ?

रोटिकां सूपं शाकञ्च

तत्र कति विद्यार्थिनस्तिष्ठन्ति ?

मह्यं जलं देहि, अहं पास्यामि

यदि त्वं वदिष्यसि, तर्हि अहं चपटीं दास्यामि

अस्मिन् कोष्टे द्वौ विद्यार्थिनौ निवसतः

स त्रीणि दाडिमानि भुक्तवान्

असत्यं न वक्तव्यम्

योऽसत्यं वदति, स पापी भवति

---

# पाठ १९



अतः, पितुः, हस्तिनाम्, अधिष्ठातुः,

ह्यः, यत्, तत्,

अधुना तव भ्राता कुत्र वर्त्तते ?

पितुराज्ञा सदा पालनीया

तव ज्येष्ठभ्रातुः किन्नाम वर्त्तते ?

ह्यः स कुत्र गतवान् ?

अधिष्ठातुर्वचनं पालनीयम्

वने हस्तिनां चीत्कारं शृणु

यत् त्वं कथयसि, तत् सत्यं वर्त्तते

स तत्र किं करोतिस्म ?

अहं तत्र पुस्तकं पठामिस्म

स यदा धावतिस्म, तदा कोलाहलं करोतिस्म

तत्र कति विद्यार्थिनः पठन्तिस्म ?

अद्य अनध्यायो वर्त्तते, ऽतःक्रीडितुं चलनीयम्

स्नात्वा, भोजनं च कृत्वा, चलिष्यामः,

# पाठः २०

## प्रति, इमानि, एते,

स त्वाम्प्रति किं कथयतिस्म ?

देवकीर्ते ! त्वं किमर्थं रोदिषि ?

अध्यापको मह्यं चपेटिकां दत्तवान् ।

कुतः ?

यतोऽहं तस्य आज्ञां न पालितवान्

गुरोराज्ञा सर्वदा पालनीया

एते विद्यार्थिनः कुत्र गच्छन्ति ?

पर्वतेषु भ्रमणार्थं गच्छन्ति

इमानि वस्त्राणि कस्य सन्ति ?

मम तु न सन्ति

यदि तव न सन्ति, तर्हि कस्य सन्ति ?

अहं न जानामि

विद्यारत्न ! उद्याने भ्रमणार्थं चल

तत्र गत्वा किं करिष्यसि ?

तत्र गत्वा वृक्षान् जलेन सेक्ष्यामि

एते वृक्षास्तु शुष्काः सञ्जाताः

वृद्धानां सदा सत्कारः कर्त्तव्यः

सहाध्यायिभिस्सह कदापि युद्धं न कर्त्तव्यम्

अस्माकं श्रेण्यां दशच्छात्राः सन्ति

सर्वेऽध्यापकं सत्कुर्वन्ति

---

| | | | | |
|---|---|---|---|---|
| ११ | १२ | १३ | १४ | १५ |
| एकादश | द्वादश | त्रयोदश | चतुर्दश | पञ्चदश |
| १६ | १७ | १८ | १९ | २० |
| षोडश | सप्तदश | अष्टादश | एकोनविंशतिः | विंशतिः |

---

इति प्रथमोऽध्यायः

॥ ओ३म् ॥

# द्वितीयोऽध्यायः ।

---

## पाठः १

### ज्ञानेन्द्रियाणि

अस्माकं देहे पंच ज्ञानेन्द्रियाणि सन्ति । प्रथमं घ्राणं, येन वयं सुगन्धं गृह्णीमः । द्वितीयं चक्षुः येन वयं रूपम् पश्यामः । तृतीयं श्रोत्रं, येन वयं शब्दं शृणुमः । चतुर्थी जिह्वा, यया वयं सर्वेषां रसं जानीमः पंचमोत्वक्, यया वस्तूनां स्पर्शं जानीमः ।

वि०—अत्र न केवलं शब्दार्था एव बोधनीयाः । किन्तु इन्द्रियाणां तद्विषयाणां च सम्यक् प्रबोधः कारणीयः, "सुगन्धं केन गृह्णीमः" ? इत्यादयः प्रश्नाः कर्तव्याः, उत्तरणाय च छात्राः प्रेरणीयाः, येन तेषां ज्ञानं दृढं स्यात्, क्रमशश्चभाषणाभ्यासोपि स्यात् ।

—:०:—

# पाठः २



अश्वः

तत्र पश्य, अश्वो वर्त्तते। तस्य चत्वारः पादास्सन्ति। अश्वपुच्छस्य रोमाणि दीर्घाणि भवन्ति। अस्य रूपम् अतिसुन्दरं वर्त्तते। अश्वो वेगेन धावति, अतो मनुष्या एनमारोहन्ति। अयं नवं घासं भक्षयति। परमात्मना अस्माकमुपकाराय अश्वा रचिताः, अतो, ऽस्माभिः तस्मै धन्यवादो देयः।

वि०—"अश्वमारोहन्ति" ईदृश्यो वाक्यपद्धतयः स्फुटीकरणीयाः।

———

# पाठः ३

## वर्षा

अद्य वृष्टिर्जाता । अधुना तु आकाशो निर्मलो वर्तते । अधुना भ्रमणार्थं गङ्गां प्रति चलामः । "पश्य, अद्य गङ्गाया जलमतिमलिनं वर्तते । जलप्रवाहेण सह बहूनि काष्ठानि आगच्छन्ति । त्वं तरणं जानासि ? ये मनुष्यास्तरणं न जानन्ति, ते तुम्बीफलानि गृहीत्वा तरन्ति । अज्ञाते जले कदापि प्रवेशो न कर्त्तव्यः ।

| २१ | २२ | २३ |
|---|---|---|
| एकविंशतिः | द्वाविंशतिः | त्रयोविंशतिः |
| चतुर्विंशतिः | पञ्चविंशतिः | षड्विंशतिः |
| २४ | २५ | २६ |

| २७ | २८ | २९ | ३० |
|---|---|---|---|
| सप्तविंशतिः | अष्टाविंशतिः | एकोनत्रिंशत् | त्रिंशत् |

---

# पाठः ४



वानरः

वानरस्य मुखं रक्तं भवति । तस्य पुच्छमतिदीर्घं भवति । तस्यद्वौहस्तौ, द्वौपादौ च भवतः । स पादाभ्यां चलति । हस्ताभ्यां फलं गृहीत्वा भक्षयति । पश्य, स दन्तान् दर्शयति । अयमतिचपलोवर्त्तते । अत्र बहवः कपयः शाखासु कूर्दन्ते । यदि त्वं वानराणां क्रीडां द्रष्टुमिच्छसि तर्हि चणकान् प्रक्षिप ।

# पाठः ५

## बालकवानरयोः कथा

कदाचित्कश्चिद् बालकोवनं गच्छतिस्म । स यदा किञ्चिद् दूरं गतवान्, तदा कश्चिद् वानरोवनात् निर्गतवान् । बालकस्यहस्ते जम्बूफलानि आसन्, बालकस्य हस्तात् तानि फलानि आच्छिन्नवान्, बालकस्तु रुदन् स्वगृहं प्रत्याजगाम बालके गते सति, वानरो हर्षेण जम्बूफलानि भुक्तवान् ।

| ३१ | ३२ | ३३ | ३४ |
|---|---|---|---|
| एकत्रिंशत् | द्वात्रिंशत् | त्रयस्त्रिंशत् | चतुस्त्रिंशत् |
| ३५ | ३६ | ३७ | ३८ |
| पञ्चत्रिंशत् | षट्त्रिंशत् | सप्तत्रिंशत् | अष्टत्रिंशत् |
| ३९ | ४० | | |
| एकोनचत्वारिंशत | चत्वारिंशत् | | |

---

# पाठः ६



गौः

भूमित्र ! त्वमत्र गां पश्यसि ? पश्य, तस्या वत्सो दुग्धं पिबति। अस्याश्चत्वारः पादाः सन्ति। अस्याः सास्ना अतिशोभना वर्त्तते। गौः दुग्धमतिमधुरं ददाति। दुग्धाद् घृतं जायते। तद्बहु स्वादुभवति। नवनीतं दध्न उत्पद्यते। गौर्हरितानि शष्पाणि भक्षयति। अयं पशुः स्नेहेन पालनीयः, कदापि च न ताडनीयः।

वि०—यदि सास्नासदृशि वस्तूनि प्रत्यक्षतो दर्शयित्वा ततस्तदर्थाः कथयेरंस्तदाबाला द्रुतमेवावगच्छेयुः चिराय च तैर्न विस्मरेरन्

# पाठः ७

## रात्रिः

इदानीं रात्रिरागता। आकाशे ताराः प्रकाशन्ते। यदा चन्द्रउदेति, तदा आसां प्रकाशो मन्दो जायते। सर्वे पक्षिणः स्वानि नीडानि गतवन्तः। अधुना शृगालाः रुदन्ति। उलूकस्य भयङ्करं शब्दं शृणु। रात्रौ शयनात्पूर्वं परमात्माने धन्यवादो देयः, "हे पमपितः! तव कृपया अद्यमम कालः सुखेन व्यतीतः, अतोऽहं तुभ्यं धन्यवादान् ददामि"।

| ४१ | ४२ | ४३ |
|---|---|---|
| एकचत्वारिंशत् | द्वाचत्वारिंशत् | त्रयश्चत्वारिंशत् |
| ४४ | ४५ | ४६ |
| चतुश्चत्वारिंशत् | पञ्चचत्वारिंशत् | षट्चत्वारिंशत् |
| ४७ | ४८ | |
| सप्तचत्वारिंशत् | अष्टाचत्वारिंशत् | |
| ४९ | ५० | |
| एकोनपंचाशत् | पंचाशत् | |

—:०:—

# पाठः ८

## स्वदेशः

भारतवर्षम् पुण्यभूमिः कथ्यते । सैव अस्मा-
कंजन्मभूमिः । अस्मिन देशे पूर्वं महती विद्या
आसीत् । पाणिनिकणादगोतमादयोमुनयः
अस्मिन्नेवदेशे जाताः । अधुनापि तेषां कीर्ति
जना गायन्ति । पूर्वम् अस्माकं देशो वि-
द्यायां सर्वस्य जगतो गुरुरासीत् इदानीं तु
सर्वा विद्यानष्टा,प्राचीनं वैभवं चापि नष्टम् ।
तथापि, ईश्वरकृपया पुनः अस्माकं देशस्य
उदयो भविष्यति ।

# पाठः ९



प्रतः कालः

अधुना प्रातः कालो जातः। उत्थाय नित्यकर्माणि कृत्वा पठितुं विद्यालयं प्रति गन्तव्यम्। प्रातः काले स्नात्वा, सन्ध्या हवनं च अवश्यं कर्त्तव्यम्। हवनेन वायुशुद्धिर्जायते, सन्ध्यया मनः शान्तं भवति। प्रातः काले वायुरतिशुद्धो भवति। तस्मिन् काले उद्यानानि अति मनोहराणि दृश्यन्ते। यदा सूर्य्य उदेति, तदा पक्षिणः शाखासुस्थित्वा कलरवं कुर्वन्ति। प्रातः काले रौति कुक्कुटः।

प्रथमः द्वितीयः तृतीयः चतुर्थः पञ्चमः

षष्ठः सप्तमः अष्टमः नवमः दशमः

## पाठः १०



### उद्याने भ्रमणम् ।

उद्याने नूतनानि पुष्पाणि दृष्ट्वा हृदयं प्रसन्नं जायते । सप्तच्छदस्य पुष्पम् अतीव मनोहरं दृश्यते, अस्य सुगन्धोपि हृदयंगमो वर्तते । इदानीं दाडिमानि पक्वानि । नारङ्गस्य फलानि तु न पक्वानि । अयमाम्रस्य वृक्षः सूर्यातपेन शुष्कतां गतः । अहो ! सप्तवर्गस्य पुष्पाणि पश्यत । इक्षुरतिमधुरो भवति ।

# पाठः १९

## कर्त्तव्य परायणो बालकः

कस्मिंश्चिद् विद्यालये भूमित्रसत्यकामौ द्वौ भ्रातरौ पठतः स्म। सत्यकामो नित्यं स्वकीयं पाठंस्मृत्वाश्रावयति भूमित्रस्तु न श्रावयति। एकस्मिन् दिवसे तयोर्मात्रा उक्तम्, "अद्य यः पूर्वं पाठं स्मृत्वा श्रावयिष्यति, तस्मैमोदकं दास्यामि"। एतत् श्रुत्वा सत्यकामः स्वकीयं पाठं स्मर्तुम् आरेभे, भूमित्रस्तु क्रीडितुं गतवान्। तदा मात्रा भूमित्रम्प्रति उक्तम्,

> अधीष्व पुत्रकाधीष्व, मोदकानि ददामि ते।
> नोचेत्तस्मै प्रदास्यामि, कर्णमुत्पाटयामि ते"

सत्यकामः पाठं श्रावितवान्, अत एवमातुः सकाशात् मोदकं च लब्धवान्।

---

## पाठः १२

### प्रशंसनीयो बालकः

देवदत्त, नरेन्द्रं जानासि ? सर्वे जनाः तं कुतः प्रशंसन्ति? स गुरोर्वाक्यं सावधानतया शृणोति। प्रति दिनं पठितं स्मरति। सर्वदा सत्यं वदति। पशून दीनांश्च जनान् न दुःखयति। प्रातःकाले उत्थाय पितरौ गुरूँश्च अभिवदति। न कदापि कदापि कोलाहलं करोति। फलानि च न चोरयति। कुतो न तादृशं बालकं जनाः प्रशंसेयुः यदि यूयमपि नरेन्द्रवत् कर्माणि करिष्यथ, तर्हि प्रशंसां प्राप्स्यथ।

—:०:—

# पाठः १३

## लिखन् वानरः

केनचित् पुरुषेण कश्चिद्द वानरः पालित आसीत्। स सर्वदा लिखिन्तं स्वामिनं पश्यतिस्म। कदाचित् स्वामी कार्यवशाद् गृहाद् बहिर्गतवान्। वानरोऽचिन्तयत्, "अहमपि-स्वामिवत् कुतो न लिखेयम्" ? एतच्चिन्तयित्वा वानरेण स्वामिनः शाटिकाधारिता, अङ्गरक्षकं च धारितम्। ततः स लेखितुमुपधेरुपरिस्थितवान्। तस्मिन्नैव काले तस्य स्वामी आगतवान्। वानरं दृष्ट्वा स्वामी जहास। वानरस्य समीपं च गत्वा उवाच, "महाशय ! नमस्ते"।

# पाठः १४

## समयः

अयं पठनस्य समयो वर्तते, अतः पठनीयम्। अस्मिन् समये वृथा कोलाहलो न कर्तव्यः। यदा खेलनस्य समयः स्यात् तदा खेलनं कर्तव्यम्। उपदेशस्य समये उपदेशः श्रोतव्यः। सत्यपालः पठनस्य समये पठति, क्रीडनस्य समये क्रीडति, अतः सर्वे जनास्तं प्रशंसन्ति। जगदीशः पठनस्य समये क्रीडति, क्रीडनस्य समये च स्वपिति, अतः सर्वे जनास्तस्य निन्दां कुर्वन्ति।

—:०:—

# पाठः १५

## धीरो मनोहरः ।

(१) "वासुदेव ! आगच्छ आवां चित्रं कुर्वः" इत्युक्त्वा मनोहरः स्वकीयमासनं प्रसार्य्य उपविष्टवान् । वसुदेवोऽपि स्वकीयमासनं गृहीत्वा तस्य पार्श्वे उपाशित् । तयोर्मनोहरो धीरतर आसीत् । वासुदेवस्तु चपल आसीत् ।

(२) मनोहरः सप्तच्छदस्य चित्रं चकार । वासुदेवेन तस्योपरि मसी पातिता । चित्रं विरूपं बभूव । ततो मनोहरोऽपरं चित्रं कृतवान् । वासुदेवेन तस्योपरि धूलिः पातिता मनोहरस्तदा शान्तया वाचा उवाच "भ्रातः ! किमेतत् करोषि"!

( ३ ) तदा तत्र तयोः पिता आजगाम । स उवाच "मनोहर ! चित्रं दर्शय"। मनोहरो-दर्शितवान । तद् दृष्ट्वा स पृष्टवान् "अत्र धूलिः किमर्थं पतिता" मनोहरेणोक्तं "वासुदेवेन पातिता" । वासुदेवोऽपि याथार्थ्येन सर्वमुक्तवान् । तदा तयोः पिता उवाच "वत्स ! पुनरेवं कदापि न कर्तव्यम् । यतस्त्वया सत्यमुक्तम्, अतस्त्वां न दण्डयामि,,। तयोः पिता मनोहराय पारितोषिकरूपेण एकां लेखनीं ददौ ।

---

# पाठः १६

## ग्रीष्मः ।

अधुना ग्रीष्मकालो वर्तते। शरीरे बहुःप्रस्वेदो जायते। वायुरपि उष्णो वर्तते। शीतलं जलं पातुमिच्छा जायते। अस्मिन् काले गङ्गायाः जलं शीतलं भवति। सायंकाले गङ्गाजलेन स्नानं कृत्वा शैत्यं जायते। मध्याह्ने कोपि बहिर्न गन्तुं न शक्नोति। अन्ये मनुष्याश्छत्रं धारयित्वा बहिर्गच्छन्ति, परन्तु ब्रह्मचारिभिः कदापिच्छत्रं न धारणीयम्। पादुके धारयित्वा बहिर्गन्तव्यम्, अन्यथा आतपेन पादौ ज्वलिष्यतः।

## पाठ : १७

## उत्तमो विचारः

( १ ) एकस्मिन् दिने विश्वेश्वर उद्याने खेलतिस्म । तत्र तेन एकं फलं पतितं दृष्टम्, तत्फलं विश्वेश्वर आनीय, अध्यापकाय दत्तवान्
(२) अध्यापकः सन्तुष्य तत् फलं विश्वेश्वरायैव दत्तवान् । विश्वेश्वरस्तु न भुक्तवान् उक्तवांश्च अध्यापकाय "श्रीमन् अहमेकाकी कथं भक्षयेयम् अपरेभ्योऽपि विद्यार्थिभ्यो दीयताम्"

( ३ ) एतच्छ्रुत्वा तेषामध्यापकः तस्य फलस्य बहूनि खंडानि कृत्वा सर्वेभ्यो ददौ । सर्वे विद्यार्थिनः हर्षम् आपुः, विश्वेश्वरस्य च प्रशंसां कृतवन्तः ।

## पाठः १८

## परस्परम्प्रीतिः ।

परस्परं कदापि युद्धं न कर्तव्यम् । क्रोधेन शरीरं दुर्बलं भवति । यो विद्यार्थी अन्यैःसह युध्दं करोति, तम्प्रतिकोपि न वदति । सर्वे-तस्माद् घृणां कुर्वन्ति ।

द्रुमेषु शान्त्यानिवसन्तिपक्षिणः,
शरीरहानिश्च भवत्यशान्ततः ।
ततः कुतश्छात्रजनैः परस्परम्,
कदापिकार्य्यः कलहो निजे कुले

सहाध्यायिभिस्सह सर्वदाप्रीत्या वर्तनीयम् ऐक्ये बहवो गुणाः निवसंति ।

—:०:—

## पाठः१९

## ईश्वरः

ईश्वरोऽस्माकं सर्वेषां पिताऽस्ति । तेन इदं सर्वं जगद् रचितम् । मामपि स एवरचितवान् । स मह्यं शीतलं वायुं ददाति । पानार्थं निर्मलं जलमपि तेनैव दत्तम् । यथा अहं तस्य पुत्रोऽस्मि, तथैव अन्येपि तस्य पुत्राः सन्ति, अतः कोपि न पीडनीयः । यदा अहं शयनं करोमि तदापि स एव मां रक्षति । स सर्वत्र व्यापको वर्तते । स सर्वदा मां पश्यति अतोऽहं कदापि पापं न करिष्यामि ।

सूर्यश्चन्द्रस्तारका भूमिरेषा ॥
शीतो वायुर्निर्मलं वारि नद्याः ।
एतत्सर्वं येन मह्यं प्रदत्तम्
प्रातस्सायं तं महेशं स्मरेम

इति द्वितीयोऽध्यायः ।

* ओ३म् *

# गुरुकुलीय सा० परिषत्सकाशात्पूर्वं

## प्रकाशितानां ग्रन्थानां

## विज्ञापनम् ॥



( १ ) प्रथम वार्षिक वृत्तान्तम् !

( २ ) द्वितीय " "

( ३ ) तृतीय " "

( ४ ) चतुर्थ "

( ५ ) मांसमीमांसा

( ६ ) वैदिक देवतास्वरूपम्

( ७ ) वैदिक रोगजन्तु शास्त्रम् ( आर्य्यभाषा )

( ८ ) संस्कृत साहित्यं तत्समालोकाश्च

( ९ ) देवस्थनादितम् ( आर्य्यभाषा )

( १० ) भारतीयशिक्षादर्शः [ आर्य्यभाषा ]